देह और आत्मा प्राणवृत्ति में प्रतिष्ठित है। प्राणवृत्ति अपान में प्रतिष्ठित है, अन्यथा अपानवृत्ति द्वारा रोके बिना यह प्राण बाहर निकल जाता। वैसे ही मध्यवर्ती व्यानवृत्ति द्वारा रोके बिना यह अपानवृत्ति नीचे की ओर चली जाती और प्राणवृत्ति ऊपर की ओर ही चली जाती। अतः अपानवृत्ति व्यान में प्रतिष्ठित है। व्यान उदान में प्रतिष्ठित है। यदि पूर्वोक्त तीनों वृत्तियाँ कीलस्थानीय उदानवृत्ति में बँधी नहीं होती तो ये सभी ओर चली जातीं। समान में केवल उदान नहीं, अपितु सभी प्राणादि प्रतिष्ठित हैं; उक्त प्रसङ्ग से यही दिखलाया है कि शरीर, हृदय और वायु ये परस्पर प्रतिष्ठित हैं। तथा विज्ञानमय के लिए प्रयुक्त होकर संघात रूप से नियमपूर्वक प्रवृत्त होते हैं। अब इसके आगे यह बतलाना है कि यह सब जिसके द्वारा नियत है और जिसमें आकाशादि सम्पूर्ण जगत् ओत-प्रोत एवं प्रतिष्ठित है; उसी निरुपाधिक साक्षादपरोक्ष ब्रह्म का निर्देश अग्रिम प्रसङ्ग से करना है। मधुकाण्ड में **''नेति नेति''** वाक्य से जिसका निर्देश किया गया है, वही यह आत्मा सम्पूर्ण कार्य धर्म से अतीत होने के कारण अगृह्य है। अतः गृहीत नहीं होता। एवं मूर्त्त और संघात से भिन्न होने के कारण अशीर्य है। अतः नष्ट नहीं होता। अमूर्त्त होने से असङ्ग है। इसलिए कहीं भी संसक्त नहीं होता और न व्यथित एवं हिंसित ही होता है। शीघ्रता में श्रुति ने क्रम को छोड़कर औपनिषद पुरुष का स्वरूपतः निर्देश किया। अब पुनः आख्यायिका का ही अनुसरण करती है — पृथिव्यादि आठ आयतन, अग्न्यादि आठ आलोक, शारीरादि आठ पुरुष और अमृतादि आठ देव बतलाये गये हैं। जो उन पुरुषों को निश्चयपूर्वक जानकर पुनः प्राची आदि दिग् द्वारा उन्हें अपने हृदयरूप आत्मा में उपसंहार कर औपाधिक धर्मों का अतिक्रमण किये हुए है; उसी औपनिषद पुरुष को तुझ विद्याभिमानी से मैं पूछता हूँ। यदि तुम उसकी विस्पष्ट व्याख्या नहीं करोगे तो तुम्हारा शिर गिर जायेगा, ऐसा याज्ञवल्क्य ने कहा। किन्तु शाकल्य उसे जानता नहीं था; अतः उसका शिर गिर गया। लुटेरों ने उसकी हड्डियों को कुछ और ही समझकर उसके शिष्यों के पास से छीन लिया। ब्रह्मज्ञानी के अनादर से ऐसा दुष्परिणाम होता है। इस प्रकार यह आख्यान आचार प्रदर्शन और विद्यास्तुति के लिये है। पहले निषेधमुख से ब्रह्म का निर्देश किया था; अब पुनः विधिमुख से ब्रह्म निर्देश के लिये आख्यान का अनुसरण करती हुई श्रुति कहती है। अब्रह्मज्ञ ब्राह्मणों को जीतकर गोधन ग्रहण को उचित मानते हुए याज्ञवल्क्य ने कहा — हे पूज्य ब्राह्मणों! आपमें जिसकी इच्छा हो, वह मुझसे पूछे या सभी मुझ से पूछें, अथवा आपमें से जो चाहे, उससे मैं पूछता हूँ, या सभी से मैं पूछता हूँ। इस प्रकार कहने पर भी प्रत्युत्तर देने का साहस उन ब्राह्मणों में नहीं हुआ। तब वृक्ष के दृष्टान्त से जगत् कारण के विषय में याज्ञवल्क्य ने पूछा, किन्तु जगत् के मूल का ज्ञान उन ब्राह्मणों को नहीं था। अतः ब्राह्मण हार गए और ब्रह्मिष्ठ होने से याज्ञवल्क्य गायों को ले गए। इस प्रकार आख्यान समाप्त हो गया।

याज्ञवल्क्य ने जिस जगत् के कारण के विषय में पूछा था, उसे श्रुति स्वयं ही कहती है — वह विज्ञान स्वरूप है, वही आनन्द है। वही जगत् कारण विषय विज्ञान के समान दुःख से अनुविद्ध नहीं है किन्तु विज्ञान और आनन्द इन दोनों विशेषणों से युक्त ब्रह्म क्या है। वह धन का दाता और यजमान के कर्मफलदाता होने से परम गति है। इतना ही नहीं, प्रत्युत ब्रह्मनिष्ठ और ब्रह्मवेत्ता का भी परायण है।

पूर्व ब्राह्मणोक्त निषेध और विधिवाक्य द्वारा निर्दिष्ट विज्ञान आनन्दरूप ब्रह्म का ही याज्ञवल्क्यकाण्ड द्वितीयाध्याय प्रथम याज्ञवल्क्य ब्राह्मण में वागादि देवता के द्वारा बोध कराया गया है। इस प्रथम याज्ञवल्क्य

ब्राह्मण में राजा जनक और याज्ञवल्क्य का संवाद है। जनक ने विभिन्न आचार्यों से वाक्, प्राण, चक्षुः, श्रोत्र, मन और हृदय को ही ब्रह्मरूप से सुन रखा था। जिन्हें राजा जनक से सुनकर याज्ञवल्क्य ने प्रत्येक के आयतन (गोलक) और प्रतिष्ठा (आश्रय) को पूछा। किन्तु उन आचार्यों से उक्त विषय में जनक ने कुछ सुना नहीं था। अतः वे बतला न सके। तब याज्ञवल्क्य ने उन सभी के आयतन और प्रतिष्ठा को बतलाकर भिन्न-भिन्न प्रकार से उनकी उपासना का विधान बतलाया। उनमें प्रत्येक उपासना का फल बतलाते समय यही कहा कि इनके उपासकों को उपास्यदेव कभी नहीं त्यागता है। उस उपासक का अनुसरण सभी प्राणी करते हैं और वह उपासक देव होकर देवों को प्राप्त करता है। जनक ने प्रत्येक उपासना के फल सुन उसीको परम पुरुषार्थ मानकर याज्ञवल्क्य को एक-एक हजार गौएँ भेंट करना चाहा, किन्तु याज्ञवल्क्य ने उसे यह कह कर अस्वीकार कर दिया कि मेरे पिता का यह सिद्धान्त रहा है कि शिष्य को कृतार्थ किये बिना उसका धन नहीं लेना। अतः अपने पिता के सिद्धान्त के विरुद्ध मैं इस दक्षिणा को स्वीकार नहीं कर सकता।

इस घटना से राजा जनक में दानीपने, विद्वानपने और बहुश्रुत होने का अहङ्कार चूर-चूर हो गया। वे राजसिंहासन से उठ याज्ञवल्क्य के समीप जाकर नमस्कार करते हुए उपदेश के लिये प्रार्थना करते हैं। तब याज्ञवल्क्य ने ज्ञानित्वादि का अभिमान त्याग कर शिष्यभाव से शरणापन्न राजा जनक को विद्या का अधिकारी समझकर उन्हें विराट् का उपदेश किया और फिर उस सर्वात्मा का प्रत्यगात्मा में उपसंहार करके परब्रह्म का भी उपदेश किया। जिससे जनक ने अपने में कृतकृत्यता का अनुभव करते हुए अपना सम्पूर्ण राज्य-वैभवादि गुरुदेव के चरणों में समर्पण कर दिया। इस प्रकार द्वितीय कूर्च ब्राह्मण के साथ ही यह प्रकरण समाप्त हो जाता है।

मुनिकाण्ड के द्वितीयाध्याय तृतीय ज्योतिर्नामा ब्राह्मण में आत्मा के स्वयंज्योतिष्ट्व होने का प्रतिपादन किया गया है। इस बार जनक के पास जाते समय याज्ञवल्क्य ने सोचा कि मैं कुछ भी नहीं बोलूँगा। किन्तु बात विपरीत हो गयी क्योंकि अग्निहोत्रसंवाद प्रसङ्ग में किसी समय प्रसन्न हो ऋषि ने राजा को स्वेच्छापूर्वक प्रश्न करने के लिए वरदान दे रखा था। अतः प्रश्न करने के सामान्य नियम का पालन न कर जनक ने याज्ञवल्क्य से पूछा कि यह पुरुष किस ज्योति वाला है। याज्ञवल्क्य ने क्रमशः आदित्य, चन्द्रमा, अग्नि, वाक् और अन्त में आत्मज्योति से बैठना, अन्यत्र जाना, सब काम करना एवं नियत स्थान पर लौट आने की बात कही। वह आत्मा प्राणों में बुद्धिवृत्तियों के भीतर विज्ञानमय है। वह जाग्रत् में बुद्धि के साथ तादात्म्य हुआ सब काम करता है और स्वप्न में देहरूप मृत्यु के रूपों को पार कर जाता है। वह आत्मस्वरूप के अज्ञान से जनन-मरणादि देहधर्म को अपने में मानता है। यह जाग्रत्, स्वप्न और सुषुप्ति अवस्था में क्रमशः और क्रम के बिना भी जाता आता रहता है। स्वप्न में रथादि के न रहने पर भी जाग्रत् की वासना से स्वयंप्रकाश आत्मा सब कुछ बना लेता है। यह स्वप्न द्वारा देह को निश्चेष्ट करके भी स्वयं सोता नहीं है और देह को जीवित पहिचान के लिए प्राण को छोड़ जाता है; अन्यथा निद्राकाल में कहीं मृत्यु का भ्रम न हो जाये। आश्चर्य यह है कि स्वप्न में आत्मा के विलास को सभी देखते हैं; पर आत्मा को नहीं देखते। आत्मा की असङ्गता बेहद है। यह एक अवस्था की वस्तु को दूसरी अवस्था में नहीं ले जाता, किन्तु अकेला ही चल जाता है। अतः जाग्रदादि सभी अवस्थाओं से इसकी असङ्गता

सिद्ध होती है। यह जाग्रत् और स्वप्न में श्रान्त हुआ बाज पक्षी के समान ही अपने विश्राम स्थान सुषुप्ति में चला जाता है। सम्पूर्ण द्वैत के विस्मरणपूर्वक स्वरूप की स्मृति बनी रहे तो इसी को जीवनमुक्ति कहते हैं। सोया हुआ पुरुष जाग्रत् और स्वप्न के दृश्य पदार्थ के सङ्ग और उससे होने वाले शोक को पार कर जाता है। वह नित्य, विज्ञानघन आत्मा सुषुप्ति में किसी वस्तु को नहीं देखता। इससे उसके दर्शनादि शक्ति के नाश की आशङ्का नहीं करनी चाहिये क्योंकि वह शक्ति उसकी नित्य है। जाग्रत् स्वप्न में अविद्या की विक्षेपशक्ति से द्वैत के खड़े हो जाने पर दूसरे को दूसरा देखता सुनता है, इत्यादि। जैसे जल विशुद्ध और एक है, वैसे ही सुषुप्ति में अद्वैत आत्मा द्रष्टा एक है। सुषुप्ति और समाधि में द्वैत का विस्मरण समान है। दोनों में भेद इतना ही है कि समाधि में स्वरूप का बोध बना रहता है और निद्रा में वह बोध नहीं रहता है। यही पुरुष की परम गति, परम सम्पत्ति, परम लोक और परम आनन्द है। इसी आनन्द की कला को लेकर तीनों लोक जीवित हैं। मनुष्य के सर्वाधिक आनन्द से लेकर ब्रह्मलोक पर्यन्त विषय-संसर्गजन्य जितना भी आनन्द है; इन सभी से अधिक आनन्द निष्पाप, कामनाशून्य, श्रोत्रिय ब्रह्मनिष्ठ विद्वान् को प्राप्त होता रहता है। आत्मानन्द की अभिव्यक्ति जितनी विषय से होती है, उससे कई गुणा अधिक आत्मानन्दाभिव्यक्ति निष्कामता तथा स्वरूपनिष्ठा से होती है। यह बात यहाँ पर तथा तैत्तिरीयोपनिषद् में भी बतलायी गयी है। इन सभी बातों को सुनकर राजा जनक ने कहा कि इसके बदले श्रीमान् को मैं एक सहस्र गायें देता हूँ। अतः इसके आगे भी आप बन्धन से मुक्त करने के लिये उपदेश करें। इस बात को सुनकर महर्षि भयभीत हो गये। भयभीत होने के दो कारण हो सकते हैं। एक यह कि हमारे सम्पूर्ण उपदेश को केवल एक हजार गौदक्षिणा से राजा माप रहा है। दूसरा यह कि कामप्रश्न के बहाने मेरा सारा विज्ञान ले लेना चाहता है। हम मोक्ष उपयोगी सभी उपदेश कर चुके हैं। अब कुछ शेष रहा नहीं। यदि कुछ आगे हम कहेंगे; तो सम्भवतः उसे भी यह बुद्धिमान् राजा इसी मापदण्ड से मापेगा, जो उचित नहीं। फिर कामप्रश्नरूप वरदान दे देने के कारण मैं तो बंधा हुआ हूँ। निःसन्देह आत्मा का प्रवक्ता और श्रोता दोनों ही आश्चर्य हैं। इस आत्मविद्या को किसी भी मायिक पदार्थ से मापा नहीं जा सकता। इसके आगे मरणासन्न की दशा, ऊर्ध्वश्वास का कारण, देहान्तर में जाने का प्रकार एवं प्राणों का देहान्तर में जाने की विधि का निपुणतम निरूपण किया गया है।

मुनिकाण्ड द्वितीयाध्याय के चतुर्थ शारीर ब्राह्मण में महर्षि याज्ञवल्क्य ने सम्पूर्ण उपदेशों का सार सग्रंह करके बतलाया है। मरणासन्न दशा में यह जीव सभी इन्द्रियों के तेज को लेकर हृदयदेश में अभिव्यक्त विज्ञानवाला होता है। हृदय के अग्रभाग के प्रद्योतनपूर्वक भावी देह ग्रहण के लिए चक्षुरादि द्वार से निकल जाता है। उस जीव के साथ ज्ञान, कर्म और पूर्वानुभवजन्य संस्कार जाते हैं। जैसे तृणजलोका आगे के पैरों से दूसरे तृण का आश्रय लेने पर ही पहले वाले तृण को छोड़ता है, वैसे ही यह जीवात्मा वर्तमान शरीर को अचेतन बना दूसरे शरीर का आश्रय लेकर ही पूर्व देह को छोड़ता है। यह विज्ञानमय आत्मा संकल्पानुसार शरीर का निर्माण कर लेता है और संकल्प पूर्व के कर्म एवं वासना के अनुरूप होता है। पुनः संकल्पानुसार कर्म कर तदनुरूप फल को प्राप्त करता है। यह तो कामनामय अज्ञानी जीव की गति बतलायी। इससे भिन्न आप्तकाम ज्ञानी पुरुष के प्राण देहान्तर ग्रहण के लिये शरीर से निकलते ही नहीं हैं। प्रत्युत ब्रह्मज्ञानी जीवितावस्था में ही ब्रह्मस्वरूप हो जाता है। प्रारब्धक्षीण होते ही निर्विशेष ब्रह्मभाव

को प्राप्त कर जाता है। जीवन्मुक्त पुरुष सर्प की केचुली की भाँति देह को छोड़कर सुखपूर्वक स्वरूप में स्थित रहता है। इस उपदेश के बदले एक सहस्र गौ भेंट करने की प्रतिज्ञा पुनः जनक ने की। औपनिषद पुरुष की उपेक्षा कर केवल कर्म में या कर्मबोधक वेदादि शास्त्रों के अभ्यास में लगे रहने वाले व्यक्ति अन्धकूप में गिरते हैं। ऐसे अज्ञानी पुरुष घोर अज्ञानान्धकार से आच्छादित उन लोकों को प्राप्त करते हैं, जहाँ पर सुख नाममात्र भी नहीं है। इसके विपरीत आत्मा को अपरोक्ष अनुभव करने वाला आप्तकाम एवं कृतकृत्य पुरुष शरीर के ताप से भी सन्तप्त नहीं होता। वह तो जीवित दशा में ही मुक्त हो जाता है। इस प्रकार आत्मा को जानकर जीवन्मुक्ति का लाभ इस मनुष्य देह में ही प्राप्त करना चाहिये। अन्यथा इस क्षति की पूर्ति कहीं भी सम्भव नहीं है। भूत, भविष्य और वर्तमान इन तीनों काल के प्रशासक, प्रकाशमय आत्मतत्त्व की शास्त्र एवं आचार्य की कृपा से जानने वाला ब्रह्मवेत्ता भय के कारण द्वैत के मिट जाने से शरीर सुरक्षा की भी चिन्ता नहीं करता। सर्वाधार, अद्वय ब्रह्म के अपरोक्ष ज्ञान से अमरत्व मिलता है और भेददर्शी बार-बार जन्मता-मरता रहता है। आत्मबोधक वेदान्त शास्त्र का ही अनुशीलन करें; अनात्मबोधक शास्त्र का अभ्यास केवल वाणी का व्यायाममात्र भूसे कूटने के समान व्यर्थ प्रयास है। ऐसे आत्मज्ञान तथा आत्मनिष्ठा प्राप्त करने के लिये एषणात्रय का संन्यास करना भी आवश्यक है। उस आत्मजिज्ञासु की दृढ़ धारणा होती है कि जब हमें आत्मलोक का ही सम्पादन करना है; तो फिर हम प्रजा से क्या करेंगे। **''नेति नेति''** निषेधमुख से वेदान्त वाक्य द्वार आत्मा को जानकर ज्ञानी पुरुष धर्माधर्म को भी दग्ध कर डालता है, जो अज्ञानदशा में सबको सन्तप्त करते रहते हैं। इस प्रकार ओजस्वी भाषा द्वारा याज्ञवल्क्य ने राजा जनक को उपदेश किया। उन्होंने इस उपदेश से कृतकृत्य हो ऋषि के चरणों में आत्मसमर्पण कर डाला। आत्मा महान्, अजन्मा, अजर, अमर, अभय, ब्रह्मस्वरूप है। ऐसे आत्मा को जानने वाला पुरुष अभय ब्रह्मस्वरूप हो जाता है। इस प्रकार शारीर ब्राह्मण का सार बतलाया गया।

इसके आगे मुनिकाण्ड की रीति से मैत्रेयी ब्राह्मण में आत्मतत्त्व का उपदेश मैत्रेयी को महर्षि याज्ञवल्क्य ने किया और जीवन्मुक्ति के विलक्षण आनन्दानुभव करने के लिये संन्यास ग्रहण कर लिया। इस अध्याय के षष्ठ ब्राह्मण में मुनिकाण्ड के आचार्य वंश का वर्णन है इस प्रकार याज्ञवल्क्यकाण्ड के दोनों अध्यायों का संक्षिप्त वर्णन हो जाता है।

बृहदारण्यक के अन्तिम सप्तम एवं अष्टम दो अध्याय खिलकाण्ड के नाम से प्रसिद्ध हैं। इसमें अनेक प्रकार की उपासनाएँ बतलायी गयी हैं। खिलकाण्ड के प्रथमाध्याय में १५ ब्राह्मण हैं। बृहदारण्यक के इससे भिन्न किसी अध्याय में इतने ब्राह्मण नहीं हैं। प्रथम ब्राह्मण में वायु के समान ही असङ्ग और व्यापक चिदाकाश की उपासना ओङ्काररूप से करनी चाहिये, ऐसा बतलाया गया है।

प्राजापत्यनामक द्वितीय ब्राह्मण में एक रोचक आख्यान है। प्रजापति के पुत्र देव, मानव और दानव एक बार दीर्घकाल तक उनके पास ब्रह्मचर्यपूर्वक वास किये। तप से शुद्धान्तःकरण उन तीनों को क्रमशः एक ही ''द'' अक्षर का उपदेश प्रजापति ने किया। अपने अधिकार और योग्यता के अनुरूप देवों ने इन्द्रियदमन, मनुष्यों ने दान और दानवों ने दया अर्थ उस दकार का समझा। जिसे ब्रह्मा ने यथार्थ बतलाया। तत्पश्चात् क्रमशः हृदयब्रह्म, सत्यब्रह्म, सत्यब्रह्मसंस्थान रूप आदित्यमण्डलस्थ और दक्षिणनेत्रस्थपुरुष, मनोमय

पुरुष, विद्युद्ब्रह्म, वाग्धेनु की उपासना, वैश्वनराग्निघोष, उपासनागति, रोगादिजन्यताप में तपदृष्टि, अन्न और प्राण के अन्योऽन्याश्रयत्व, उक्थदृष्टि से प्राणोपासना, गायत्री के प्रत्येक पाद की उपासना और फल का वर्णन, अन्त में कर्म और उपासना के समुच्चय अनुष्ठान वालों के लिये मार्ग याचना बतलाकर प्रथमाध्याय समाप्त हो जाता है।

खिलकाण्ड के अन्तिम अध्याय में प्राणसंवाद से मुख्यप्राण की श्रेष्ठता बतलायी गयी है। प्राणोपासक के लिये भोजन से पूर्व और पश्चात् स्मृतिविहित आचमन में अनग्नता चिन्तन करने को बतलाया। जिसका विस्तृत विचार ब्रह्मसूत्र में किया गया है।

इससे पूर्व ज्ञानकर्मसमुच्चय अनुष्ठान करने वाले साधक शोभनमार्ग से ले जाने के लिये परमेश्वर से प्रार्थना कर रहे थे। उससे पूर्व केवलकर्म से पितृलोक और उपासना एवं उपासनासहित कर्म से देवलोक की प्राप्ति बतलायी गयी है। पर उपर्युक्त दोनों स्थानों में मार्ग विशेष का निर्धारण नहीं किया गया था। इसी बात को स्पष्ट बतलाने के लिये कर्मविभागनामक द्वितीय ब्राह्मण कहा गया है। विद्याभिमानी श्वेतकेतु पाञ्चालों की सभा में आया। वहाँ पर प्रवाहण जैवलि ने श्वेतकेतु से पाँच प्रश्न पूछे — उनमें से एक का उत्तर भी वह न दे सका। इससे खिन्न मन हो श्वेतकेतु अपने पिता के पास आकर उलाहना देने लगा। श्वेतकेतु के पिता गोतम ने भी इस विषय में अपनी अनभिज्ञता व्यक्त की। गोतम उक्त प्रश्नों के उत्तर जानने के लिये प्रवाहण के पास आया। ब्राह्मण होने के कारण गोतम वाणीमात्र से क्षत्रिय प्रवाहण के प्रति शिष्यभाव से उपसन्न हुआ क्योंकि आपत्तिकाल में ब्राह्मण को क्षत्रिय स्वीकार के शिष्यत्व करने के लिये शास्त्र ने आज्ञा दे रखी है। उसके बाद राजा ने द्युलोक, पर्जन्य, भूलोक, पुरुष एवं स्त्रीरूप आध्यात्मिक पाँच अग्नियों का उपदेश कर प्रसिद्ध षष्ठाग्नि का भी उपदेश किया। जो अनुवाद मात्र है, उपास्य नहीं है। अतएव छान्दोग्य की पञ्चाग्निविद्या और बृहदारण्यक की पञ्चाग्निविद्या को समान मानकर परस्पर गुणोपसंहार का आदेश ब्रह्मसूत्र में सूत्रकार एवं भाष्यकार ने दिया है। प्रतीकोपासकों में से केवल पञ्चाग्निविद्या का उपासक ही अर्चिरादि देवयान से ब्रह्मलोक जाता है, दूसरे प्रतीकोपासक नहीं जाते, इससे विपरीत केवल कर्मी, मरने पर, धूमादि पितृयान से चन्द्रलोक जाते हैं। जहाँ से कर्मफल भोगने के बाद पुनरावृत्ति होती है। इन दोनों से भिन्न प्राणी के लिए कीट, पंतगादि योनियों में बार-बार जन्म मरण ही गति है।

इस अध्याय के तृतीय श्रीमन्थब्राह्मण में कर्म के साधन मानुषवित्त धनोपार्जन का वह उपाय बतलाया है, जिससे प्रत्यवाय न लगे क्योंकि उपासना स्वतन्त्र है; किन्तु कर्म दैव तथा मानुषवित्त के अधीन है। महत्त्वप्राप्ति के लिये श्रीमन्थ कर्मानुष्ठान की आवश्यकता है क्योंकि महत्त्व प्राप्त होने पर धन स्वतः सिद्ध हो जाता है। इसीलिये श्रीमन्थ ब्राह्मण कहा गया है।

जिस प्राणोपासक धनार्थी पुरुष ने श्रीमन्थ ब्राह्मण में विहित कर्म का अनुष्ठान कर लिया है; श्रीमन्थ कर्मानुष्ठान कर पुत्रमन्थ कर्मानुष्ठान के लिये उसे पत्नी के ऋतुकाल की प्रतीक्षा करनी पड़ती है क्योंकि सत्सन्तान ही अपने और पिता के लोकप्राप्ति का साधन हो सकती है। अतः सत्सन्तान प्राप्ति के लिये यह श्रीमन्थ ब्राह्मण कहा गया है। शास्त्रविधि से उत्पन्न किया हुआ पुत्र अपने पिता पितामहादि से भी आगे

बढ़ जाता है। तथा "तू लक्ष्मी, कीर्ति और ब्रह्मचर्य द्वारा उन्नति की पराकाष्ठा पर पहुँच गया" ऐसी स्तुति उसकी लोग करते हैं। विशिष्ट पुत्र से पिता भी स्तुति का पात्र बन जाता है।

पंचम ब्राह्मण में खिलकाण्ड की आचार्य परम्परा का वर्णन है। यहाँ परस्त्री विशेषण से पुत्र का विशेषण देकर आचार्य वंश का वर्णन इसलिये किया गया है क्योंकि स्त्री प्रधानता से ही गुणवान् पुत्र की उत्पत्ति पुत्रमन्थ प्रसंग में बतलायी गयी है। ये यजुः श्रुतियाँ आचार्य वंश बतलाने वाली ब्राह्मण से मिली नहीं हैं। जिससे इनमें कोई पौरुषेयत्व की आशङ्का कर सके। ये तो सर्वथा शुद्ध हैं। इस प्रकार सम्पूर्ण बृहदारण्य-कोपनिषद् का सार संग्रह किया गया।

अनादि अपौरुषेय वेद के शिरोभाग होने से उपनिषद् भी अनादि और अपौरुषेय है। इसकी परम्परा भी ऐसी ही है। पर वेदान्त का जैसा केवलाद्वैत सिद्धान्त भगवत्पाद आद्य शङ्कराचार्य जी की वाणी में निखर कर आया, ऐसा इनसे पूर्व देखने में नहीं आता। इसीलिये पीछे में केवलाद्वैत सिद्धान्त को शाङ्कर सिद्धान्त की संज्ञा दी गयी है। इनसे पूर्व या तो केवल कर्मकाण्ड में मानव समाज निरत थे या उससे ऊबकर अवैदिक सिद्धान्त और तन्त्र साधनों में निरत होते जा रहे थे। उस समय साक्षात् भगवान् शङ्कर ने शङ्कराचार्य रूप से इस धरा पर अवतरित हो सनातन वैदिक सिद्धान्त को प्रशस्त किया। उपनिषद्, ब्रह्मसूत्र और गीता को प्रस्थानत्रयी कहते हैं। इन तीनों से समर्थित सिद्धान्त ही विद्वत्समाज में मान्य होता है। अतः आद्य शङ्कराचार्य जी ने प्रस्थानत्रयी पर भाष्य लिखा, साथ ही अनेक प्रकरण ग्रन्थों का निर्माण कर अद्वैत ज्ञान को सुलभ कर दिया। ईशादि जिन दशोपनिषद् पर भगवान् आद्य शङ्कराचार्य जी का भाष्य है; उनमें बृहदारण्यकोपनिषद् का स्थान सर्वश्रेष्ठ है। इसमें भाष्यकार ने अपना हृदय खोलकर रख दिया है। केवल कर्म या ज्ञानकर्मसमुच्चय के अनुष्ठान से शाश्वत शान्ति रूप मोक्ष नहीं मिलता। अपितु मोक्ष का ऐकान्तिक साधन ब्रह्मात्मैक्यबोध है। यह बोध असति प्रतिबन्ध के साधन चतुष्टय सम्पन्न मुमुक्षु को अद्वैत ब्रह्मविद्या के आचार्य के मुख से महावाक्य सुनते ही हो जाता है। इसीलिये इस आत्मा को औपनिषद पुरुष कहा गया है। जिसका साक्षात्कार केवल उपनिषद् महावाक्य से होता हो, उसे औपनिषद पुरुष कहते हैं। असम्भावना विपरीत भावना प्रतिबन्धक के रहने पर श्रोत्र के साथ महावाक्य का सम्बन्ध होने पर भी अद्वैतज्ञान नहीं होता। अतः उक्त प्रतिबन्धक की निवृत्ति के लिए अद्वैत ब्रह्मविद्या के श्रोत्रिय ब्रह्मनिष्ठ आचार्य मुख से गुरु उपसत्तिपूर्वक वेदान्त का श्रवण, मनन और निदिध्यासनरूप विचार करना चाहिये, ऐसा श्रुति का आदेश है। उपनिषद् के मौलिक सिद्धान्त को अवगत करने के लिए मूलमन्त्र, शाङ्करभाष्य और उसकी आनन्दगिरि टीका को आचार्य परम्परा से पढ़ना आवश्यक है। वह परम्परा आज भी कैलासश्रम में दृष्टिगोचर होती है। इत्योंशम्।

भगवत्पादीय :
**महामण्डलेश्वर स्वामी विद्यानन्द गिरि जी**

गंगा दशहरा
**श्री कैलास आश्रम**
उत्तरकाशी (उ० प्र०)

ॐ तत्सद्ब्रह्मणे नमः।

# बृहदारण्यकोपनिषत्

## खिलकाण्डम्

***

# अथ पञ्चमोऽध्यायः

***

### खंनाम प्रथमं ब्राह्मणम्

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माऽऽह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम्॥**

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य खंनाम प्रथमं ब्राह्मणम्॥१॥**

### मिताक्षराहिन्दीव्याख्या

आकाश ब्रह्म ओंकार रूप है (यहाँ खं शब्द से भौतिक आकाश नहीं समझना चाहिए)। अतः आकाश परमात्मस्वरूप है। जिसमें वायु रहता है; वह ही खं है, ऐसा कौरव्यायणी पुत्र ने कहा है (अर्थात् खं शब्द का मुख्य अर्थ भूताकाश ही होता है। ब्रह्माकाश तो गौण अर्थ है।) यह ओंकार, वेद, यानी नाम है, इसी से वेदितव्य वस्तु ब्रह्म का प्रकाश होता है। ऐसा ब्राह्मण जानते हैं, क्योंकि जो वस्तु वेदितव्य है; उसका इसी ओंकार से बोध होता है॥१॥

॥ इति प्रथमं ब्राह्मणम्॥

---

### अथ श्रीमच्छङ्करभगवत्पादविरचितं भाष्यम्

पूर्णमद इत्यादि खिलकाण्डमारभ्यते। अध्यायचतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरो निरुपाधिकोऽशनायाद्यतीतो "नेति नेतीति" व्यपदेश्यो निर्धारितो, यद्विज्ञानं केवलममृतत्वसाधनमधुना तस्यैवाऽऽत्मनः सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य पुरस्तादनुक्तान्युपासनानि कर्मभिरविरुद्धानि प्रकृष्टाभ्युदयसाधनानि क्रममुक्तिभाञ्जि च यानि, तानि वक्तव्यानीति परः संदर्भः। सर्वोपासनशेषत्वेनोंकारो दमं दानं दयामित्येतानि च विधित्सितानि। **पूर्णमदः**

**पूर्णं** न कुतश्चिद्व्यावृत्तं व्यापीत्येतत्। निष्ठा च कर्तरि द्रष्टव्या। **अद** इति परोक्षाभिधायि सर्वनाम तत्परं ब्रह्मेत्यर्थः। तत्संपूर्णमाकाशवद्व्यापि निरन्तरं निरुपाधिकं च। तदे**वेदं** सोपाधिकं नामरूपस्थं व्यवहारापन्नं **पूर्णं** स्वेन रूपेण परमात्मना व्याप्येव नोपाधिपरिच्छिन्नेन विशेषात्मना। तदिदं विशेषापन्नं कार्यात्मकं ब्रह्म **पूर्णात्**कारणात्मन **उदच्यत** उद्रिच्यत उद्गच्छतीत्येतत्। यद्यपि कार्यात्मनोद्रिच्यते, तथाऽपि यत्स्वरूपं पूर्णत्वं परमात्मभावं तन्न जहाति **पूर्ण**मेवोद्रिच्यते। **पूर्णस्य** कार्यात्मनो ब्रह्मणः **पूर्णं** पूर्णत्व**मादाय** गृहीत्वाऽऽत्मस्वरूपैकरसत्वमापाद्य विद्ययाऽविद्याकृतं भूतमात्रोपाधिसंसर्गजमन्यत्वावभासं तिरस्कृत्य **पूर्णमेवा**नन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्म**ावशिष्यते**।

यदुक्तं ''ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेद्'''' अहं ब्रह्मास्मि''इति''तस्मात्तत्सर्वमभवत्'' इत्येषोऽस्य मन्त्रस्यार्थः। तत्र ब्रह्मेत्यस्यार्थः पूर्णमद इति। इदं पूर्णमिति ''ब्रह्म वा इदमग्र आसीदि''त्यस्यार्थः। तथा च श्रुत्यन्तरम्— ''यदेवेह तदमुत्र यदमुत्र तदन्विह'' इति। अतोऽदःशब्दवाच्यं पूर्णं ब्रह्म तदेवेदं पूर्णं कार्यस्थं नामरूपोपाधिसंयुक्तमविद्ययोद्रिक्तम्। तस्मादेव परमार्थस्वरूपादन्यदिव प्रत्यवभासमानम्। तद्यदात्मानमेव परं पूर्णं ब्रह्म विदित्वाऽहमदः पूर्णं ब्रह्मास्मीत्येवं पूर्णमादाय तिरस्कृत्यापूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसंपर्कजामेतया ब्रह्मविद्यया, पूर्णमेव केवलमवशिष्यते। तथा चोक्तम् ''तस्मात्तत्सर्वमभवत्'' इति।

यः सर्वोपनिषदर्थो ब्रह्म स एषोऽनेन मन्त्रेणानूद्यत उत्तरसंबन्धार्थम्। ब्रह्मविद्यासाधनत्वेन हि वक्ष्यमाणानि साधनान्योंकारदमदानदयाख्यानि विधित्सितानि खिलप्रकरणसंबन्धात्सर्वोपासनाङ्गभूतानि च।

अत्रैके वर्णयन्ति—पूर्णात्कारणात्पूर्णं कार्यमुद्रिच्यते। उद्रिक्तं कार्यं वर्तमानकालेऽपि पूर्णमेव परमार्थवस्तुभूतं द्वैतरूपेण। पुनः प्रलयकाले पूर्णस्य कार्यस्य पूर्णतामादायाऽऽत्मनि धित्वा पूर्णमेवावशिष्यते कारणरूपम्। एवमुत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्यकारणयोः पूर्णतैव। सा चैकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते। एवं च द्वैताद्वैतात्मकमेकं ब्रह्म। यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव। यथा च जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्-

बुदादयः समुद्रात्मभूता एवाऽऽविर्भावतिरोभावधर्मिणः परमार्थसत्याः। एवं सर्वमिदं द्वैतं परमार्थसत्यमेव जलतरङ्गादिस्थानीयं, समुद्रजलस्थानीयं तु परं ब्रह्म। एवं च किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यं, यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृगतृष्णिकावदनृतद्वैतमेव परमार्थतस्तदा किल कर्मकाण्डं विषयाभावादप्रमाणं भवति। तथा च विरोध एव स्यात्। वेदैकदेशभूतोपनिषत्प्रमाणं परमार्थाद्वैतवस्तु-प्रतिपादकत्वादप्रमाणं कर्मकाण्डमसद्द्वैतविषयत्वात्। तद्विरोधपरिजिहीर्षया श्रुत्यैतदुक्तं कार्यकारणयोः सत्यत्वं समुद्रवत्पूर्णमद इत्यादिनेति।

तदसत्। विशिष्टविषयापवादविकल्पयोरसंभवात्। न हीयं सुविवक्षिता कल्पना। कस्मात्? यथा क्रियाविषय उत्सर्गप्राप्तस्यैकदेशेऽपवादः क्रियते। "यथा-ऽहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य" इति हिंसा सर्वभूतविषयोत्सर्गेण निवारिता तीर्थे विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते। न च तथा वस्तुविषय इहाद्वैतं ब्रह्मोत्सर्गेण प्रतिपाद्य पुनस्तदेकदेशेऽपवदितुं शक्यते। ब्रह्मणोऽद्वैतत्वादेवैकदेशानुपपत्तेः। तथा विकल्पानुपपत्तेश्च। यथा "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" इति ग्रहणाग्रहणयोः पुरुषाधीनत्वाद्विकल्पो भवति। न त्विह तथा वस्तुविषये द्वैतं वा स्यादद्वैतं वेति विकल्पः संभवत्यपुरुषतन्त्रत्वादात्मवस्तुनः। विरोधाच्च द्वैताद्वैतत्व-योरेकस्य। तस्मान्न सुविवक्षितेयं कल्पना।

श्रुतिन्यायविरोधाच्च। सैन्धवघनवत्प्रज्ञानैकरसघनं निरन्तरं पूर्वापरबाह्या-भ्यन्तरभेदविवर्जितं सबाह्याभ्यन्तरमजं "नेति नेत्यस्थूलमनणवह्रस्वमजरमभयममृतम्" इत्येवमाद्याः श्रुतयो निश्चितार्थाः संशयविपर्यासाशङ्कारहिताः सर्वाः समुद्रे प्रक्षिप्ताः स्युरकिंचित्करत्वात्। तथा न्यायविरोधोऽपि सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानुपपत्तेः। नित्यत्वं चाऽऽत्मनः स्मृत्यादिदर्शनादनुमीयते। तद्विरोधश्च प्राप्नो-त्यनित्यत्वे। भवत्कल्पनानर्थक्यं च। स्फुटमेव चास्मिन्पक्षे कर्मकाण्डानर्थक्यम्। अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्।

ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते। कथमुच्यते भवतैकस्य

द्वैताद्वैतत्वं विरुद्धमिति। न। अन्यविषयत्वात्। नित्यनिरवयववस्तुविषयं हि विरुद्धत्वमवोचाम द्वैताद्वैतत्वस्य, न कार्यविषये सावयवे। तस्माच्छ्रुतिस्मृतिन्यायविरोधादनुपपन्नेयं कल्पना। अस्याः कल्पनाया वरमुपनिषत्परित्याग एव।

अध्येयत्वाच्च न शास्त्रार्थेयं कल्पना। न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं समुद्रवनादिवत्सावयवमनेकरसं ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्योपदिश्यते। प्रज्ञानघनतां चोपदिशति "एकधैवानुद्रष्टव्यम्" इति च। अनेकधादर्शनापवादाच्च "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति। यच्च श्रुत्या निन्दितं तन्न कर्तव्यम्। यच्च न क्रियते न स शास्त्रार्थः। ब्रह्मणोऽनेकरसत्वमनेकधात्वं च द्वैतरूपं निन्दितत्वान्न द्रष्टव्यम्। अतो न शास्त्रार्थः। यत्त्वेकरसत्वं ब्रह्मणस्तद्द्रष्टव्यत्वात्प्रशस्तं, प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति।

यत्तूक्तं वेदैकदेशस्याप्रामाण्यं कर्मविषये द्वैताभावादद्वैते च प्रामाण्यमिति। तन्न। यथाप्राप्तोपदेशार्थत्वात्। न हि द्वैतमद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म वा ब्रह्मविद्यां वोपदिशति शास्त्रम्। न चोपदेशार्हं द्वैतं, जातमात्रप्राणिबुद्धिगम्यत्वात्।

न च द्वैतस्यानृतत्वबुद्धिः प्रथममेव कस्यचित्स्यात्। येन द्वैतस्य सत्यत्वमुपदिश्य पश्चादात्मनः प्रामाण्यं प्रतिपादयेच्छास्त्रम्। नापि पाषण्डिभिरपि प्रस्थापिताः शास्त्रस्य प्रामाण्यं न गृह्णीयुः।

तस्माद्यथाप्राप्तमेव द्वैतमविद्याकृतं स्वाभाविकमुपादाय स्वाभाविक्यैवाविद्यया युक्ताय रागद्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्मोपदिशत्यग्रे, पश्चात्प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते तद्विपरीतौदासीन्यस्वरूपावस्थानफलार्थिने तदुपायभूतामात्मैकत्वदर्शनात्मिकां ब्रह्मविद्यामुपदिशति। अथैवं सति तदौदासीन्यस्वरूपावस्थाने फले प्राप्ते शास्त्रस्य प्रामाण्यं प्रत्यर्थित्वं निवर्तते। तदभावाच्छास्त्रस्यापि शास्त्रत्वं तं प्रति निवर्तत एव।

तथा प्रतिपुरुषं परिसमाप्तं शास्त्रमिति न शास्त्रविरोधगन्धोऽप्यस्ति। अद्वैत-

ज्ञानावसानत्वाच्छास्त्रशिष्यशासनादिद्वैतभेदस्य। अन्यतमावस्थाने हि विरोधः स्यादवस्थितस्येतरेतरापेक्षत्वात्तु शास्त्रशिष्यशासनानां नान्यतमोऽप्यवतिष्ठते। सर्वसमाप्तौ तु कस्य विरोध आशङ्क्येताद्वैते केवले शिवे सिद्धे। नाप्यविरोधताऽत एव।

अथाप्यभ्युपगम्य ब्रूमः—द्वैताद्वैतात्मकत्वेऽपि शास्त्रविरोधस्य तुल्यत्वात्। यदाऽपि समुद्रादिवद्द्वैताद्वैतात्मकमेकं ब्रह्माभ्युपगच्छामो नान्यद्वस्त्वन्तरं, तदाऽपि भवदुक्ताच्छास्त्रविरोधान्न मुच्यामहे। कथम्? एकं हि परं बह्म द्वैताद्वैतात्मकं तच्छोकमोहाद्यतीतत्वादुपदेशं न काङ्क्षति। न चोपदेष्टाऽन्यो ब्रह्मणो, द्वैताद्वैतरूपस्य ब्रह्मण एकस्यैवाभ्युपगमात्।

अथ द्वैतविषयस्यानेकत्वादन्योन्योपदेशो न ब्रह्मविषय उपदेश इति चेत्। तदा द्वैताद्वैतात्मकमेकमेव ब्रह्म नान्यदस्तीति विरुध्यते। यस्मिन्द्वैतविषयेऽन्योन्योपदेशः सोऽन्यो द्वैतं चान्यदेवेति समुद्रदृष्टान्तो विरुद्धः। न च समुद्रोदकैकत्ववद्विज्ञानैकत्वे ब्रह्मणोऽन्यत्रोपदेशग्रहणादिकल्पना संभवति। न हि हस्तादिद्वैताद्वैतात्मके देवदत्ते वाक्कर्णयोर्देवदत्तैकदेशभूतयोर्वागुपदेष्ट्री कर्णः केवल उपदेशस्य ग्रहीता, देवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य ग्रहीतेति कल्पयितुं शक्यते। समुद्रैकोदकात्मत्ववदेकविज्ञानवत्त्वाद्देवदत्तस्य। तस्माच्छ्रुतिन्यायविरोधश्चाभिप्रेतार्थासिद्धिश्चैवंकल्पनायां स्यात्। तस्माद्यथाव्याख्यात एवास्माभिः पूर्णमद इत्यस्य मन्त्रस्यार्थः।

**ॐ खं ब्रह्मे**ति मन्त्रः अयं चान्यत्राविनियुक्त इह ब्राह्मणेन ध्यानकर्मणि विनियुज्यते। अत्र च ब्रह्मेति विशेष्याभिधानं खमिति विशेषणम्। विशेषणविशेष्ययोश्च सामानाधिकरण्येन निर्देशो नीलोत्पलवत्खं ब्रह्मेति। ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदोऽविशेषितोऽतो विशेष्यते खं ब्रह्मेति। यत्तत्**खं ब्रह्म** तदोंशब्दवाच्यमोंशब्दस्वरूपमेव वोभयथाऽपि सामानाधिकरण्यमविरुद्धम्।

इह च ब्रह्मोपासनसाधनत्वार्थमोंशब्दः प्रयुक्तः। तथा च श्रुत्यन्तरात् 'एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्' 'ओमित्यात्मानं युञ्जीत' 'ओमित्येतेनैवाक्षरेण परं

पुरुषमभिध्यायीत' 'ओमित्येवं ध्यायथ आत्मानम्' इत्यादेः। अन्यार्थासंभवाच्चोपदेशस्य। यथाऽन्यत्रोमिति शंसत्योमित्युद्गायतीत्येवमादौ स्वाध्यायारम्भापवर्गयोश्चोंकारप्रयोगो विनियोगादवगम्यते, न च तथाऽर्थान्तरमिहावगम्यते। तस्माद्ध्यानसाधनत्वेनैवेहोंकारशब्दस्योपदेशः।

यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकास्तथाऽपि श्रुतिप्रामाण्याद्ब्रह्मणो नेदिष्ठमभिधानमोंकारः। अत एव ब्रह्मप्रतिपत्ताविदं परं साधनम्। तच्च द्विप्रकारेण प्रतीकत्वेनाभिधानत्वेन च। प्रतीकत्वेन‡, यथा विष्ण्वादिप्रतिमाऽभेदेनैवमोंकारो ब्रह्मेति प्रतिपत्तव्यः। तथा ह्योंकारालम्बनस्य ब्रह्म प्रसीदति।

''एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते''॥ इति श्रुतेः।

तत्र खमिति भौतिके खे प्रतीतिर्मा भूदित्याह—**खं पुराणं** चिरंतनं खं परमात्माकाशमित्यर्थः। यत्तत्परमात्माकाशं पुराणं खं तच्चक्षुराद्यविषयत्वान्निरालम्बनमशक्यं ग्रहीतुमिति श्रद्धाभक्तिभ्यां भावविशेषेण चोंकार आवेशयति। यथा विष्ण्वङ्गाङ्कितायां शिलादिप्रतिमायां विष्णुं लोक एवम्। **वायुरं खं** वायुरस्मिन्विद्यत इति **वायुरं खं** खमात्रं खमित्युच्यते न पुराणं खमित्येव**माह स्म।** कोऽसौ? **कौरव्यायणीपुत्रः**। वायुरे हि खे मुख्यः खशब्दव्यवहारस्तस्मान्मुख्ये संप्रत्ययो युक्त इति मन्यते। तत्र यदि पुराणं खं ब्रह्म निरुपाधिस्वरूपं यदि वा वायुरं खं सोपाधिकं ब्रह्म, सर्वथाऽप्योंकारः प्रतीकत्वेनैव प्रतिमावत्साधनत्वं प्रतिपद्यते। ''एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः'' इति श्रुत्यन्तरात्। केवलं खशब्दार्थे विप्रतिपत्तिः।

**वेदोऽयमों**कारो वेद विजानात्यनेन यद्वेदितव्यम्। तस्माद्वेद ॐकारो वाचकोऽभिधानम्। तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं वेद, साधको विजानात्युपलभते। तस्मा**द्वेदोऽयमिति ब्राह्मणा विदुः**। तस्माद्ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतमोंकारस्य। अथवा वेदोऽयमित्याद्यर्थवादः। कथमोंकारो

देव, मानव, और दानव को एक ही "द" अक्षर से अभीष्ट उपदेश की प्राप्ति.

। अथ पञ्चमाध्यायस्य प्राजापत्यनाम द्वितीयं ब्राह्मणम्।

**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति॥१॥**

देवता, इन्द्रिय लोलुपता.

देव, नर और असुर; ये तीनों प्रजापति के पुत्र थे। उन्होंने पिता प्रजापति के पास शिष्यभाव से ब्रह्मचर्यपूर्वक निवास किया। ब्रह्मचर्यपूर्वक वास के बाद देवों ने प्रजापति से कहा-आप हमें उपदेश करें। प्रजापति ने उन देवों से 'द' यह अक्षर कहा और पूछा-क्या आप लोग समझ गये? इस पर देवताओं ने कहा-हाँ, हम लोग समझ गये। आपने 'इन्द्रिय दमन करो' ऐसा हमें उपदेश दिया है, (क्योंकि देवता स्वभाव से अजितेन्द्रिय होते हैं; अतः उन्हें इन्द्रिय दमन की आवश्यकता होती है) तब प्रजापति ने कहा— ठीक है, आप लोग समझ गये हो॥१॥

---

ब्रह्मणः प्रतीकत्वेन विहितः**? ॐ खं ब्रह्मे**ति सामानाधिकरण्यात्तस्य स्तुतिरिदानीं वेदत्वेन। सर्वो ह्ययं वेद ॐकार एव। एतत्प्रभव एतदात्मकः सर्व ऋग्यजुःसामादिभेदभिन्न एष ओंकारः ''तद्यथा शङ्कुना सर्वाणि पर्णानि'' इत्यादिश्रुत्यन्तरात्। इतश्चायं **वेद** ॐकारो **यद्वेदितव्यं** तत्सर्वं वेदितव्यमोंकारेणैव **वेदैनेना**तोऽयमोंकारो वेदः। इतरस्यापि वेदस्य वेदत्वमत एव। तस्माद्विशिष्टोऽयमोंकारः साधनत्वेन प्रतिपत्तव्य इति। अथवा वेदः सः। कोऽसौ? यं ब्राह्मणा विदुरोंकारम्। ब्राह्मणानां ह्यसौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयः। तस्मिन्हि प्रयुज्यमाने साधनत्वेन सर्वो वेदः प्रयुक्तो भवतीति॥१॥

इति श्रीबृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य खंनाम प्रथमं ब्राह्मणम्॥१॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः— **त्रयास्त्रिसंख्याकाः प्राजा-**

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति॥२॥**

**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदे-**

उसके बाद प्रजापति से मनुष्यों ने कहा— हमें आप उपदेश करें। प्रजापति ने उन्हें भी 'द' यह अक्षर ही बतलाया और पूछा— समझ गये? मनुष्यों ने कहा— हाँ, हम सब समझ गये। आपने हमें 'दान करो' ऐसा उपदेश किया है (क्योंकि मनुष्य स्वभाव से ही लोभी होता है) तब प्रजापति ने कहा— हाँ, ठीक है, आप लोग समझ गये॥२॥

फिर प्रजपति से दैत्यों ने कहा आप हमें उपदेश करें। प्रजापति ने 'द' यह अक्षर

---

**पत्याः** प्रजापतेरपत्यानि प्राजापत्यास्ते किं? **प्रजापतौ पितरि ब्रह्मचर्यं** शिष्यत्ववृत्तेर्ब्रह्मचर्यस्य प्राधान्याच्छिष्याः सन्तो ब्रह्मचर्य**मूषुः**उषितवन्त इत्यर्थः। के ते? विशेषतो देवा मनुष्या असुराश्च। ते चोषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते— तेषां **देवा ऊचुः** पितरं प्रजापतिम्। किमिति। **ब्रवीतु** कथयतु **नोऽस्मभ्यं** यदनुशासनं **भवानिति। तेभ्य** एवमर्थिभ्यो **हैतदक्षरं** वर्णमात्र**मुवाच द इति।** उक्त्वा च तान्पप्रच्छ पिता, किं **व्यज्ञासिष्टा३ इति।** मयोपदेशार्थमभिहितस्याक्षरस्यार्थं विज्ञातवन्त आहोस्विन्नेति। देवा **ऊचुर्व्यज्ञासिष्मेति** विज्ञातवन्तो वयम्। यद्येवमुच्यतां किं मयोक्तमिति। देवा ऊचु**र्दाम्यत**दान्ता यूयं स्वभावतोऽतो दान्ता भवतेति **नोऽस्मानात्थ** कथयसि। इतर **आहोमिति** सम्यग्**व्यज्ञासिष्टेति**॥१॥

समानमन्यत्। स्वभावतो लुब्धा यूयमतो यथाशक्ति संविभजत **दत्तेति नोऽस्मानात्थ**। किमन्यद्ब्रूयान्नो हितमिति मनुष्याः॥२॥

तथाऽसुरा **दयध्वमिति**। क्रूरा यूयं हिंसादिपरा, अतो **दयध्वं** प्राणिषु

भक्त्या कल्पितं यद् द्वैतं, अद्वैतादपि सुन्दरम्॥



वाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयꣳ शिक्षेद्दमं दानं दयामिति॥३॥

असुराः क्रूर

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य प्राजापत्यनाम द्वितीयं ब्राह्मणम्॥२॥

ही कहा और पूछा क्या आप लोग समझ गये? दैत्यों ने कहा— हाँ, हम सब समझ गये हैं। आपने हमें 'दया करो' ऐसा कहा। तब प्रजापति ने कहा— हाँ ठीक हैं, आप लोग समझ गये। उस प्रजापति के अनुशासन का मेघगर्जनरूपी दैवी वाणी 'द द द' इस प्रकार आज भी अनुवाद कर रही है अर्थात् दमन करो, दान करो और दया करो। अतः दमन, दान और दया इन तीनों को अपने अधिकारानुरूप सभी ने सीख लिया॥३॥

॥इति द्वितीयं ब्राह्मणम्॥

---

दयां कुरुतेति। **तदेतत्**प्रजापतेरनुशासनमद्याप्यनुवर्तत **एव**। यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा। कथमेषा श्रूयते **दैवी वाक्**? काऽसौ **स्तनयित्नुः**? **द द द इति दाम्यत दत्त दयध्वमित्येषां** वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यतेऽनुकृतिः। न तु स्तनयित्नुशब्दस्त्रिरेव, संख्यानियमस्य लोकेऽप्रसिद्धत्वात्। यस्मादद्यापि प्रजापतिर्दाम्यत दत्त दयध्वमित्यनुशास्त्येव, तस्मात्कारणादे**तत्त्रयम्**। किं तत्त्रयं इत्युच्यते — **दमं दानं दयामिति शिक्षेद्**पादद्यात्प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात्। तथा च स्मृतिः—

"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्"॥इति।

दाम्यत, दयध्वं, दत्त

अस्य हि विधेः शेषः पूर्वः। तथाऽपि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान्प्रजापतिः पृथगनुशासनार्थिभ्यः। ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारवर्णमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति।

अत्रैके आहुरदान्तत्वादानत्वादयालुत्वैरपराधित्वमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूषुः किं नो वक्ष्यतीति। तेषां च दकारश्रवणमात्रादेवाऽऽत्माशङ्कावशेन तदर्थप्रतिपत्तिरभूत्। लोकेऽपि हि प्रसिद्धं पुत्राः शिष्याश्चानुशास्याः सन्तो दोषान्निवर्तयितव्या इति। अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम्। दमादित्रये च दकारान्वयादात्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुं चेति। फलं त्वेतदात्मदोषज्ञाने सति दोषान्निवर्तयितुं शक्यतेऽल्पेनाप्युपदेशेन, यथा देवादयो दकारमात्रेणेति।

नन्वेतत्त्रयाणां देवादीनामनुशासनं देवादिभिरप्येकैकमेवोपादेयमद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्यमिति। अत्रोच्यते—पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितमेतत्त्रयं, तस्मान्मनुष्यैरेव शिक्षितव्यमिति। तत्र दयालुत्वस्याननुष्ठेयत्वं स्यात्, कथमसुरैरप्रशस्तैरनुष्ठितत्वादिति चेत्। न, तुल्यत्वात्त्रयाणाम्। अतोऽन्योऽत्राभिप्रायः प्रजापतेः पुत्रा देवादयस्त्रयः, पुत्रेभ्यश्च हितमेव पित्रोपदेष्टव्यम्। प्रजापतिश्च हितज्ञो नान्यथोपदिशति। तस्मात्पुत्रानुशासनं प्रजापतेः परममेतद्धितम्। अतो मनुष्यैरेवैतत्त्रयं शिक्षितव्यमिति।

अथवा न देवा असुरा वाऽन्ये केचन विद्यन्ते मनुष्येभ्यः। मनुष्याणामेवादान्ता येऽन्यैरुत्तमैर्गुणैः संपन्नास्ते देवाः, लोभप्रधाना मनुष्यास्तथा हिंसापराः क्रूरा असुराः। त एव मनुष्या अदान्तत्वादिदोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्तीतरांश्च गुणान्सत्त्वरजस्तमांस्यपेक्ष्य। अतो मनुष्यैरेव शिक्षितव्यमेतत्त्रयमिति। तदपेक्षयैव प्रजापतिनोपदिष्टत्वात्। तथा हि मनुष्या अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते। तथाच स्मृतिः— "कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्" इति॥३॥

इति बृहदारण्कोपनिषद्भाष्ये पञ्चमाध्यायस्य प्राजापत्यनाम द्वितीयं ब्राह्मणम्॥२॥

हृदय ब्रह्म की उपासना

।अथ पञ्चमाध्यायस्य हृदयनाम तृतीयं ब्राह्मणम्।

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥

इन्द्रिय — इन्द्रिय विषय

## इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य हृदयनाम तृतीयं ब्राह्मणम् ॥३॥

जो "हृदय" है, वह प्रजापति है। वह ब्रह्म है क्योंकि वह सब का आत्मा है। अतएव यह सर्व भी है। यह "हृदय" ऐसा तीन अक्षर नाम वाला है। "हृ" यह एक अक्षर है। जो ऐसा जानता है, उसके प्रति स्व (इन्द्रियाँ) और अन्य शब्दादि विषय बलि समर्पण करते हैं। "द" यह एक अक्षर है, इस प्रकार जो उपासना करता है, उसे स्वजातीय और असंबद्ध पुरुष भी बलि समर्पण करते हैं। "यम्" यह एक अक्षर है। इसे जो जानता है; वह स्वर्ग लोक को प्राप्त करता है (जब नाम के अक्षर की उपासना करने वाले को भी विशिष्ट फल मिलता है, तो "हृदय" ब्रह्म की उपासना से प्राप्त होने वाले फल के विषय में कहना ही क्या है)॥१॥

॥ इति तृतीयं ब्राह्मणम् ॥

---

दमादिसाधनत्रयं सर्वोपासनशेषं विहितम्। दान्तोऽलुब्धो दयालुः सन्सर्वोपासनेष्वधिक्रियते। तत्र निरुपाधिकस्य ब्रह्मणो दर्शनमतिक्रान्तम्। अथाधुना सोपाधिकस्य तस्यैवाभ्युदयफलानि वक्तव्यानीत्येवमर्थोऽयमारम्भः—

एष प्रजापतिर्यद्धृदयं प्रजापतिरनुशास्तीत्यनन्तरमेवाभिहितम्। कः पुनरसावनुशास्ता प्रजापतिरिति। उच्यते— **एष प्रजापतिः**। कोऽसौ? **यद्धृदयं** हृदयमिति हृदयस्था बुद्धिरुच्यते। यस्मिञ्शाकल्यब्राह्मणान्ते नामरूपकर्मणामुपसंहार उक्तो दिग्विभागद्वारेण, तदेतत्सर्वभूतप्रतिष्ठं सर्वभूतात्मभूतं हृदयं प्रजापतिः प्रजानां

## । अथ पञ्चमाध्यायस्य सत्यनाम चतुर्थं ब्राह्मणम्।

**तद्वै तदेतदेव तदास, सत्यमेव स, यो हैतं महद्यक्षं प्रथमजं वेद, सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित, इन्न्व-**

वही यह हृदय ब्रह्म ही वह है, जोकि सत्य ही है। जो कोई भी इस महत्पूज्य प्रथम उत्पन्न हुए को 'यह सत्य ब्रह्म है' इस प्रकार से उपासना करता है; वह इन लोकों को जीत लेता है, वह उसके वश में हो जाता है और वह असत् स्वरूप हो जाता है। जो इस प्रकार इस महत्पूज्यनीय प्रथम उत्पन्न हुए को 'सत्य ब्रह्म' इस प्रकार से उपासना

---

स्रष्टा। **एतद्ब्रह्म** बृहत्त्वात्सर्वात्मत्वाच्च ब्रह्म। **एतत्सर्वम्**। उक्तं पंचमाध्याये हृदयस्य सर्वत्वम्। तत्सर्वं यस्मात्तस्मादुपास्यं हृदयं ब्रह्म। तत्र हृदयनामाक्षरविषयमेव तावदुपासनमुच्यते। **तदेतद्धृदयमिति** नाम **त्र्यक्षरं**, त्रीण्यक्षराण्यस्येति त्र्यक्षरम्। कानि पुनस्तानि त्रीण्यक्षराण्युच्यन्ते? **हृ इत्येकमक्षरम्**। अभिहरन्ति हरतेरा-हृतिकर्मणो हृ इत्येतद्रूपमिति यो वेद, यस्माद्धृदयाय ब्रह्मणे स्वाश्चेन्द्रियाण्यन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति, हृदयं च भोक्त्रर्थमभिहरति। अतो हृदयनाम्नो हृ इत्येतदक्षरमिति यो वेदास्मै विदुषेऽभिहरन्ति स्वाश्च ज्ञातयोऽन्ये चासं-बद्धाः। बलिमिति वाक्यशेषः। विज्ञानानुरूप्येणैतत्फलम्।

तथा द इत्येतदप्येकमक्षरमेतदपि दानार्थस्य ददातेर्द इत्येतद्रूपं हृदयना-माक्षरत्वेन निबद्धम्। अत्रापि— हृदयाय ब्रह्मणे स्वाश्च करणान्यन्ये च विषयाः स्वं स्वं वीर्यं ददति, हृदयं च भोक्त्रे ददाति स्वं वीर्यमतो दकार इत्येवं यो **वेदास्मै ददति स्वाश्चान्ये च**। तथा यमित्येतदप्येकमक्षरम्। इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्नाम्नि निबद्धमिति **यो वेद स स्वर्गं लोकमेति**। एवं नामा-क्षरादपीदृशं विशिष्टं फलं प्राप्नोति, किमु वक्तव्यं हृदयस्वरूपोपासनादिति हृदयस्तुतये नामाक्षरोपन्यासः॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य हृदयनाम तृतीयं ब्राह्मणम्॥३॥

तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनं विधित्सन्नाह—**तत्तदिति** हृदयं

**सावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳह्येव ब्रह्म ॥१॥**

## इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य सत्यनाम चतुर्थं ब्राह्मणम् ॥४॥

करता है, उसे अवश्य पूर्वोक्त फल प्राप्त होता है क्योंकि सत्य ही ब्रह्म है। (अतः उपासना के अनुरूप फल मिलना उचित ही है)॥१॥

॥ इति चतुर्थं ब्राह्मणम् ॥

---

ब्रह्म परामृष्टम्। **वा** इति स्मरणार्थम्। तद्यद्धृदयं ब्रह्म स्मर्यते इत्येकस्तच्छब्दः। तदेतदुच्यते प्रकारान्तरेणेति द्वितीय**स्तच्छ**ब्दः। किं पुनस्तत्प्रकारान्तरम्? **एतदेव तदि**त्येतच्छब्देन संबध्यते तृतीयस्तच्छब्दः। **एतदिति** वक्ष्यमाणं बुद्धौ संनिधीकृत्याऽऽह। **आस** बभूव। किं पुनरेतदेवाऽऽस? यदुक्तं हृदयं ब्रह्मेति **तदिति** तृतीयस्तच्छब्दो विनियुक्तः। किं तदिति विशेषतो निर्दिशति **सत्यमेव**। सच्च त्यच्च मूर्तं चामूर्तं च सत्यं ब्रह्म, पञ्चभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमित्येतत्। **स यः** कश्चित्सत्यात्मान**मेतं महन्**महत्त्वा**द्यक्षं** पूज्यं **प्रथमजं** प्रथमजातं सर्वस्मात्संसारिण एतदेवाग्रे जातं ब्रह्मातः **प्रथमजं, वेद** विजानाति **सत्यं ब्रह्मेति**। तस्येदं फलमुच्यते—यथा सत्येन ब्रह्मणेमे लोका आत्मसात्कृता जिताः, एवं सत्यात्मानं ब्रह्म महद्यक्षं प्रथमजं वेद, स **जयतीमाँल्लोकान्**। किंच **जितो** वशीकृतः, **इन्न्वित्थं** यथा ब्रह्मणा**ऽसौ** शत्रुरिति वाक्यशेषः। **असच्चासद्भवेदसौ** शत्रुर्जितो भवेदित्यर्थः। कस्यैतत्फलमिति पुनर्निगमयति—**य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति**। अतो विद्यानुरूपं फलं युक्तम्। **सत्यं ह्येव** यस्माद्**ब्रह्म** ॥१॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य सत्यनाम चतुर्थं ब्राह्मणम् ॥४॥

(सत्य ब्रह्म तथा सत्य नाम के अक्षरों की उपासना)

।अथ पञ्चमाध्यायस्य सत्यब्रह्मसंस्थाननाम पञ्चमं ब्राह्मणम्।

**आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं**

यह नामरूपात्मक जगत् पहले जल ही था, उसी ने सर्वप्रथम सत्य की रचना की। अतः सत्य ब्रह्म ने विराट् को और विराट् ने देवताओं को उत्पन्न किया। वे देवगण भी सत्य की ही उपासना करते हैं। वह यह सत्य तीन अक्षर वाला है। 'स' यह एक अक्षर है। ईकारानुबन्धसहित 'ती' यह एक अक्षर वाला है और 'यम्' यह भी एक अक्षर वाला है। इनमें प्रथम और अन्तिम अक्षर सत्य रूप है क्योंकि उनकी मृत्यु का अभाव है और बीच में तकार अनृत है, फिर भी वह यह अनृत तकार दोनों ओर सत्य से

---

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह। महद्यक्षं प्रथमजमित्युक्तं, तत्कथं प्रथमजत्वमिति। उच्यते—**आप एवेदमग्र आसुः। आप** इति कर्मसमवायिन्योऽग्निहोत्राद्याहुतयः। अग्निहोत्राद्याहुतेर्द्रवात्मकत्वादप्त्वम्। **ताश्चाऽऽपो**ऽग्निहोत्रादिकर्मापवर्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेणाऽऽत्मना कर्मसमवायित्वमपरित्यजन्त्य; इतरभूतसहिता एव न केवलाः। कर्मसमवायित्वात्तु प्राधान्यमपामिति। सर्वाण्येव भूतानि प्रागुत्पत्तेरव्याकृतावस्थानि कर्तृसहितानि निर्दिश्यन्त आप इति। ता आपो बीजभूता जगतोऽव्याकृतात्मनाऽवस्थितास्ता एवेदं सर्वं नामरूपविकृतं जगदग्र आसुर्नान्यत्किंचिद्विकारजातमासीत्। **ताः** पुनरापः **सत्यमसृजन्त**। तस्मात्**सत्यं ब्रह्म** प्रथमजम्। तदेतद्धिरण्यगर्भस्य सूत्रात्मनो जन्म यदव्याकृतस्य जगतो व्याकरणम्। तत्सत्यं ब्रह्म।कुतः ? महत्त्वात्। कथं महत्त्वमित्याह। यस्मात्सर्वस्य स्रष्टृ। कथम्? यत्सत्यं ब्रह्म तत्**प्रजापतिं** प्रजानां पतिं विराजं सूर्यादिकारणमसृजतेत्यनुषङ्गः। **प्रजापतिर्देवान्स** विराट्प्रजापतिर्देवानसृजत। यस्मात्सर्वमेवं क्रमेण सत्याद्ब्रह्मणो जातं, तस्मान्महत्सत्यं ब्रह्म। कथं पुनर्यक्षमिति। उच्यते — **त** एवं सृष्टा **देवाः** पितरमपि विराजमतीत्य **तदेव सत्यं** ब्रह्मो**पासते**।

अर्जुन का विभूति सम्बन्धी मोह १० मा अध्याय मे नष्ट हुआ.
" " कर्तव्य सम्बन्धी मोह १८ अध्याय के अन्त में नष्ट हुआ.



किन्तु आत्म सम्बन्धी मोह नष्ट नहीं हुआ :

**मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवं विद्वाꣳसमनृतꣳ हिनस्ति ॥ १ ॥**

प्रमादोक्त

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य सत्यब्रह्मसंस्थाननाम**

"अव्यक्तादीनि भूतानि" **पञ्चमं ब्राह्मणम् ॥ ५ ॥**

(आदित्य मण्डलस्थ और चाक्षुष पुरुष भी सत्य नाम वाला है)

**। अथ पञ्चमाध्यायस्य सत्यसंस्थानविशेषनाम षष्ठं ब्राह्मणम् ।**

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्ता-**

व्याप्त है। इसलिये यह सत्य बहुल ही है। इस प्रकार जानने वाले को मृत्यु रूप अनृत नहीं सताता, अर्थात् ऐसे उपासक को कभी प्रमाद से कहा हुआ असत्य मारता नहीं॥१॥

॥ इति पञ्चमं ब्राह्मणम् ॥

वह जो सत्य है, वह यह आदित्य है। जो इस आदित्य मण्डल में पुरुष है और जो भी यह दाएँ नेत्र में पुरुष है; वे दोनों एक दूसरे में प्रतिबिम्बित हैं। रश्मियों द्वारा

---

अत एतत्प्रथमजं महद्यक्षम्। तस्मात्सर्वात्मनोपास्यं तत्तस्यापि सत्यस्य ब्रह्मणो नाम **सत्यमिति तदेतत्त्र्यक्षरम्**। कानि तान्यक्षराणीत्यत आह—**स इत्येकमक्षरम्। तीत्येकमक्षरम्।** तीतीकारानुबन्धो निर्देशार्थः। **यमित्येकमक्षरम्**। तत्र तेषां **प्रथमोत्तमे अक्षरे** सकारयकारौ **सत्यम्**। मृत्युरूपाभावात्। **मध्यतो** मध्येऽ**नृतम्**। अनृतं हि मृत्युः। मृत्य्वनृतयोस्तकारसामान्यात्। **तदेतदनृतं** तकाराक्षरं मृत्युरूप**मुभयतः सत्येन** सकारयकारलक्षणेन **परिगृहीतं** व्याप्तमन्तर्भावितं सत्यरूपाभ्यामतोऽकिंचित्करं **तत्सत्यभूयमेव** सत्यबाहुल्यमेव **भवति**। एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिंचित्करत्वं च यो विद्वांस्त**मेवं विद्वांसमनृतं** कदाचित्प्रमादोक्तं **न हिनस्ति** ॥ १ ॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य सत्यब्रह्मसंस्थाननाम पञ्चमं ब्राह्मणम् ॥ ५ ॥

अस्याधुना सत्यस्य ब्रह्मणः संस्थानविशेष उपासनमुच्यते—**तद्यत्**। किं

वेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः, प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति, नैनमेते रश्मयः प्रत्यायन्ति॥१॥ प्रत्यागच्छन्ति

अनुग्रह करता हुआ यह आदित्य पुरुष चाक्षुष पुरुष में प्रतिष्ठित है और चाक्षुष पुरुष प्राणों के द्वारा उपकार करता हुआ उस आदित्य पुरुष में प्रतिष्ठित है। जिस समय यह आध्यात्मिक चाक्षुष पुरुष शरीर से उत्क्रमण करने लगता है; उस समय यह विज्ञानमय इस आदित्य मण्डल को चन्द्रमण्डल के समान रश्मिरहित शुद्ध ही दीखता है। फिर ये रश्मियाँ इसके पास आती नहीं (इस प्रकार परस्पर उपकार्य-उपकारक भाव के कारण ये दोनों एक सत्यात्मा के ही अंश हैं)॥१॥

---

**तत्सत्यं** ब्रह्म प्रथमजं कि**मसौ सः**। कोऽसा**वादित्यः** कः पुनरसावादित्यो, **य एष** य **एतस्मिन्ना**दित्य**मण्डले पुरुषो**ऽभिमानी सोऽसौ सत्यं ब्रह्म। **यश्चा-यमध्यात्मं** योऽयं **दक्षिणोऽक्षन्नक्षणि पुरुषः**। चशब्दात्स च सत्यं ब्रह्मेति संबन्धः। **तावेतावा**दित्याक्षिस्थौ पुरुषावेकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ यस्मात्तस्मा**दन्योन्यस्मि**न्नितरेतरस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चाऽऽदित्ये **प्रतिष्ठितौ**। अध्यात्माधिदैवतयोरन्योन्योपकार्योपकारकत्वात्। कथं प्रतिष्ठितावित्युच्यते— **रश्मिभिः** प्रकाशेनानुग्रहं कुर्व**न्नेष** आदित्यो**ऽस्मिं**श्चाक्षुषेऽध्यात्मे **प्रतिष्ठितः**। **अयं** च चाक्षुषः **प्राणै**रादित्यमनुगृह्ण**न्नमुष्मिन्ना**दित्येऽधिदैवे प्रतिष्ठितः। **सोऽ**स्मिञ्छरीरे विज्ञानमयो यो भोक्ता **यदा** यस्मिन्काल **उत्क्रमिष्यन्भवति**, तदाऽसौ आदित्यपुरुषो रश्मीनुपसंहृत्य केवलेनौदासीन्येन रूपेण व्यवतिष्ठते। तदाऽयं विज्ञानमयः **पश्यति शुद्धमेव** केवलं विरश्म्**येतन्मण्डलं** चन्द्रमण्डलमिव। तदेतदरिष्टदर्शनं प्रासङ्गिकं प्रदर्श्यते। कथं नाम पुरुषः करणीये यत्नवान्स्यादिति। **नैनं** चाक्षुषं पुरुषमुरीकृत्य तं प्रत्यनुग्रहा**यैते रश्मयः** स्वामिकर्तव्यवशात्पूर्वमागच्छन्तोऽपि पुनस्तत्कर्मक्षयमनुरुध्यमाना इव नोपयन्ति न

। अथ पञ्चमाध्यायस्याहंविशेषसत्यनाम सप्तमं ब्राह्मणम्।

**य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद॥१॥**

इस मण्डल में जो यह सत्यनामा पुरुष है, उसका 'भूः' यह शिर है क्योंकि शिर एक है और यह अक्षर भी एक है। 'भुवः' यह भुजाएँ दो हैं और अक्षर भी दो हैं। 'स्वः' यह चरण है क्योंकि पाद दो हैं और यह अक्षर भी दो हैं। 'अहः' यह उसका गोपनीय नाम है। जो ऐसा जानता है (जो अहर्नामा ब्रह्म की उपासना करता है) वह पापों को मारता है और उसे त्याग देता है॥१॥

---

प्रत्यागच्छन्त्येनम्। अतोऽवगम्यते परस्परोपकार्योपकारकभावात्सत्यस्यैवैकस्याऽऽत्मनोंऽशावेताविति॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य सत्यसंस्थानविशेषनाम षष्ठं ब्राह्मणम्॥६॥

तत्र योऽसौ कः? **य एष एतस्मिन्मण्डले पुरुषः** सत्यनामा **तस्य** व्याहृतयोऽवयवाः। कथम्? **भूरिति** येयं व्याहृतिः सा तस्य **शिरः**, प्राथम्यात्। तत्र सामान्यं स्वयमेवाऽऽह श्रुतिः— **एक**मेकसंख्यायुक्तं **शिरस्तथैतदक्षरमेकं** भूरिति। **भुव इति बाहू** द्वित्वसामान्याद्**द्वौ बाहू द्वे एते अक्षरे**। तथा **स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे**। प्रतिष्ठे पादौ प्रतितिष्ठत्याभ्यामिति। **तस्यास्य** व्याहृत्यवयवस्य सत्यस्य ब्रह्मण **उपनिष**द्रहस्यमभिधानम्। येनाभिधानेनाभिधीयमानं तद्ब्रह्माभिमुखी भवति लोकवत्। काऽसावित्याह—**अहरिति**। **अहरिति** चैतद्रूपं हन्तेर्जहातेश्चेति यो वेद स **हन्ति जहाति च पाप्मानं य एवं वेद**॥१॥

(अहं नामक चाक्षुष पुरुष के व्याहृति रूप अवयव)

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद॥२॥

गोपनीय — अहम् - नेत्रस्थ - अध्यात्म नाम.

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य अहंविशेषसत्यनाम सप्तमं ब्राह्मणम्॥७॥

(अहं नामक) (मनोमय पुरुष की उपासना)

। अथ पञ्चमाध्यायस्य मनोनामाष्टमं ब्राह्मणम्।

मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः

योगिभिर्दृश्यते

जो यह दक्षिण नेत्र में पुरुष है उसका 'भूः' यह शिर है क्योंकि शिर एक है और यह अक्षर भी एक है। 'भुवः' यह भुजाएँ हैं क्योंकि दो हैं और यह अक्षर भी दो हैं। 'स्वः' यह प्रतिष्ठा है क्योंकि पाद दो हैं और अक्षर भी दो हैं। 'अहं' यह उसका गूढ़ नाम है क्योंकि यह प्रत्यगात्मस्वरूप है। जो ऐसा जानता है, वह पाप को मारता है और त्याग देता है॥२॥

॥ इति सप्तमं ब्राह्मणम्॥

प्रकाश ही जिसका स्वरूप है, ऐसा भास्वर यह पुरुष मनोमय है। जैसे— धान या

---

एवं **योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर** इत्यादि सर्वं समानम्। **तस्योपनिषदहमिति**। प्रत्यगात्मभूतत्वात्। पूर्ववद्धन्तेर्जहातेश्चेति॥२॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य अहंविशेषसत्यनामसप्तमं ब्राह्मणम्॥७॥

उपाधीनामनेकत्वादनेकविशेषणत्वाच्च तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिविशिष्टस्योपासनं विधित्सन्नाह—

सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य मनोनामाष्टमं ब्राह्मणम्॥८॥

। अथ पञ्चमाध्यायस्य विद्युन्नाम नवमं ब्राह्मणम्।

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य

जौ सूक्ष्म होता है, वैसे ही सूक्ष्म परिणाम वाला उस अन्तर्हृदय में वह पुरुष रहता है। वही यह सबका स्वामी और सबका अधिपति है और जो कुछ भी यह जगत् है, सबका विशेष रूप से शासन करने वाला वही है (उसकी जो उपासना करता है; वह सबका शासक हो जाता है)॥१॥

॥ इत्यष्टमं ब्राह्मणम्॥

विद्युत् ब्रह्म है— ऐसा कहते हैं। अन्धकार का खण्डन या विनाश करने के कारण

---

**मनोमयो** मनःप्रायो मनस्युपलभ्यमानत्वात्। मनसा चोपलभ्यत इति **मनोमयोऽयं पुरुषो भाःसत्यो** भा एव सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाःसत्यो भास्वर इत्येतत्। मनसः सर्वार्थावभासकत्वान्मनोमयत्वाच्चास्य भास्वरत्वम्। **तस्मिन्नन्तर्हृदये** हृदयस्यान्तस्तस्मिन्नित्येतत्। **यथा व्रीहिर्वा यवो वा** परिमाणत एवंपरिमाणस्तस्मिन्नन्तर्हृदये योगिभिर्दृश्यत इत्यर्थः। **स एष सर्वस्येशानः सर्वस्य** भेदजातस्येशानः स्वामी। स्वामित्वेऽपि सति कश्चिदमात्यादितन्त्रोऽयं तु न तथा किं तर्ह्य**धिपतिर**धिष्ठाय पालयिता। **सर्वमिदं प्रशास्ति यदिदं किंच** यत्किंचित्सर्वं जगत्तत्सर्वं प्रशास्ति। एवं मनोमयस्योपासनात्तथारूपापत्तिरेव फलम्। "तं यथा यथोपासते तदेव भवतीति" ब्राह्मणम्॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्याष्टमं मनोब्राह्मणम्॥८॥

तथैवोपासनान्तरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते—**विद्युद्ब्रह्मे-**

